# THE ṢAṬPAÑCĀŚIKĀ

EDITED BY

K. MADHAVA KRISHNA SARMA, M.O.L.

*(Reprinted from Vol. VI. Part 1 of the Adyar Library Bulletin)*

ADYAR LIBRARY

1942

# MANUSCRIPTS NOTES

## THE ṢAṬPAÑCĀS'IKĀ

### *A S'ilpas'āstra Manual*

BY K. MADHAVA KRISHNA SARMA, M.O.L.

THIS short manual of *S'ilpas'āstra* is here reconstructed from a single palm-leaf MS. written in Malayalam script and deposited with the shelf-number 19. D. 10 in the Adyar Library. A second copy of the work has yet to be discovered. The *codex unicum* is old, but is in good condition. It contains a commentary also in the Malayalam language. The quotations contained in the commentary are given in footnotes. The work really consists of 58 verses. But in giving it the title Ṣaṭpañcās'ikā or Ṣaṭpañcās'ikā-saṃgraha, the author seems to have excluded the first verse which is merely an invocation and the last one which summarizes the essentials of *S'ilpas'āstra* dealt with here. The number 56 is adopted in imitation of the number of the verses of the famous astrological work, the *Ṣaṭpañcās'ikā* of *Pṛthuyas'as*, son of the great astronomer *Varāhamihira*. As to the identity of the author, there is no clue except some circumstantial evidence which enables us to surmise that he was a *S'ilpin* of Malabar where *S'ilpa-s'āstra* is even today a living science, its rules being complied with in detail in the construction of houses and temples. The work deals only with the Manuṣyālaya and is mostly or perhaps wholly (except the first and the last verses which evidently belong to the compiler) a compilation from works which are popular in Malabar. There are verses here from the Tantrasamuccaya (1426 A.D.) and the S'ilparatna (16th century). This is therefore later than the 16th century. The topics dealt with here are the

same as those treated of in such works as the *Tantrasamuccaya*, the S'ilparatna, etc. The consideration that this is the only known handy manual of its kind giving all the essentials of *S'ilpas'āstra* in a brief compass of 56 verses to be easily memorized by the *S'ilpin*, has prompted me to make it available now to students of Indian architecture in particular and to students of Sanskrit literature in general.

# षट्पञ्चाशिका

[1]प्रणम्य विश्वस्थपतिं पितामहं निसर्गसिद्धाखिलशिल्पनैपुणम् ।
मया विविच्यागमसारमीर्यते समासतो मानववास्तुलक्षणम् ॥ १ ॥
गोमत्यैः फलपुष्पदुग्धतरुभिश्चाढ्या समा प्राक्प्लवा
स्निग्धा धीररवा प्रदक्षिणजलोपेताशुबीजोद्गमा ।
सा प्रोक्ता बहुपांसुरक्षयजला तुल्या च शीतोष्णयोः
श्रेष्ठा भूरधमा समुक्तविपरीता मिश्रिता मध्यमा ॥ २ ॥
वृत्तार्धेन्दुनिभा त्रिपञ्चरसकोणा शृङ्गशूर्पाकृति-
र्मत्स्यानेकपकूर्मपृष्ठकपिलावक्त्रोपमा मेदिनी ।
भस्माङ्गारतुषास्थिकेशचितिवल्मीकादिभिः संयुता
वर्ज्या मध्यनता सगर्भकुहरा विस्रा विदिक्स्थापि च ॥ ३ ॥
विप्रादिक्रमतः कुशेषुनवदूर्वाकाशयुक्ता भुव-
स्तुल्यातानवितानसिन्धुररसाज्यांशाधिदीर्घा अपि ।
श्वेतापाटलपीतमेचकरुचश्चाज्यास्रगन्नासवा-
मोदाः स्वादुकषायतिक्तकटुकास्वादान्विताश्च स्मृताः ॥ ४ ॥
संकीर्णरूपा वसुधात्र वर्णैर्गन्धै रसैश्चाखिलवर्जनीया ।
एनाम्नालक्षितवर्णचिह्नां नक्तं परीक्षेत निमित्ततश्च ॥ ५ ॥

[1] At the beginning of the MS. there is: षट्पञ्चाशिकासंग्रहः । हरिः श्रीगणपतये नमः । अविघ्नमस्तु ॥ The colophon at the end omits 'saṃgraha.'

क्ष्मां खात्वामवटं निधाय भृतधान्यं वर्धमानं मुखे
कृत्वासिच्य घृतं निशासु सितरक्तापीतकृष्णास्तथा ।
विप्रादिक्रमतः प्रदीप्य विधिवन्नीते मुहूर्ते ज्वले-
द्वर्ती यस्य धरास्य तासु सकलास्विद्धासु सर्वोचिता ॥ ६ ॥
अब्धारादिसमीकृते क्षितितले संस्थाप्य शङ्कुं समं
तन्मूलाहितसूत्रसंभ्रमणतः संलिख्य वृत्तं भुवि ।
प्रत्यक्प्रागपि वृत्तवर्तिनि कृतच्छायाग्रके व्रणमुखं
सूत्रं न्यस्य सुसाधयेद्धरिजलेशाशे ततश्चेतरे ॥ ७ ॥
विन्दोः पूर्वपराक्रान्त्योश्छायाकर्णाङ्गुलाहतात् ।
लम्बकाप्तं पूर्वविन्दोर्नीत्वा कार्यो ऽत्र सायनात् ॥ ८ ॥
साक्षे शङ्कुमिनाङ्गुलं समतले कृत्वा प्रथक्कालज-
च्छायाग्रारचितत्रिविन्दुपरिवृत्त्योत्पाद्य मत्स्यद्वयम् ।
तत्सौषुम्नसिरोत्थसूत्रयुगयोगाच्छङ्कुमूलान्तिमं
सूत्रं न्यस्य सुसाधयेद्यमधनेशाशे ततश्चेतरे ॥ ९ ॥
सूत्रे प्रागुदगग्रके क्षितितले कृत्वा चतुःखण्डिते
खण्डे कल्पयतु द्विजादिवसतिं शार्वे ऽथवा नैर्ऋते ।
खण्डे ऽस्मिन्विततिर्भवेद्यदि पुनः श्रुत्यंशिते ब्रह्मसू-
त्राद्यंशे शुभवास्तुवीथिपदक्ळृप्त्याद्यं पुनश्चोन्नयेत् ॥ १० ॥
नन्दद्वन्द्वपुटेन वावृतितया वाह्यादिमध्यान्तिमं
वीथ्यः स्युः परितः पिशाचदिविषद्वित्ताधिभूदण्डिनाम् ।
नागाम्ब्वग्निविनायकद्रुहिणनाम्नां चासु निन्द्याः स्मृताः
पैशाचाग्न्यहिदण्डिनां गृहविधौ वीथ्यश्चतुर्दिक्ष्वपि ॥ ११ ॥
गोवह्निप्रेतभूताम्बुनागेभधनसंज्ञिताः ।
वीथ्यः प्रागादिनीचत्वात्क्रमाद्वास्तोः प्रकीर्तिताः ॥ १२ ॥
अग्निकोणादिकाः पञ्च सामान्येन शुभाः स्मृताः ।
गजादिवीथ्यो यास्तिस्रः शुभास्तदधिवासिनाम् ॥ १३ ॥

मध्ये चावरणद्वये शतपदेष्वष्टाश्वियुग्मैकके-
रेकाशीतिपदैः पदैर्नवरसाक्षिद्वन्द्वचन्द्रैरपि ।
क्षेत्रे ऽष्टाष्टपदैर्नवाब्धिदलयुग्मैरर्धचन्द्राश्विभि-
र्वास्त्वङ्गस्थसुपर्वणां पदविधिस्त्रेधा त्रिपञ्चाशतः ॥ १४ ॥
ईशाद्यं बहिरावृतिस्थपदकेष्वीशानपर्जन्यका-
वैन्द्रीन्द्रौ रविसत्यकौ भृशखहव्यादस्तथा पूषणः ।
भूयो वै वितथो गृहक्षतयमौ गन्धर्वभृङ्गौ मृग-
श्चैवं स्यान्निर्ऋतिस्तु पश्चिमपदे दौवारिको ऽपि क्रमात् ॥ १५ ॥
सुग्रीवपुष्पदन्तवरुणासुरशोषरोगाश्च वायुश्च ।
नागो ऽथ मुख्यभल्लाटेन्द्वर्गळा दित्युदतीति बाह्यावृतौ स्युः ॥ १६ ॥
ईशाद्यापापवत्सार्यकसवितृकसावित्रसंज्ञा विवस्वान् ।
इन्द्राख्यश्चेन्द्रजिन्मित्रकशिवशिवजिद्भूभृतो ऽन्तर्वृतौ स्युः ॥ १७ ॥
ब्रह्मा मध्यचतुष्पदे ऽथ शर्वसहितः स्कन्दो ऽर्यमा जम्भकः
प्रागादौ पिलिपिञ्छकश्च चरकीशादौ विदार्याह्वया ।
भूयः पूतनिका च पापपदपूर्वा राक्षसी बाह्यत-
श्चैते ऽष्टावपदस्थिताश्च परितो देवग्रहास्तद्बहिः ॥ १८ ॥
नाड्यः प्रागुदगग्रगा दश दशैकाशीतिकोष्ठे शिवा-
ग्न्यग्राः पञ्च पृथङ्नवोर्मिगुणकोष्ठस्थास्तथा रज्जवः ।
मर्माण्यष्टरसाशुगाब्धिगुणसंख्यातैरकोष्ठस्थितै-
स्सूत्रैर्योगसमुद्भवानि तु शतं वर्ज्यानि कुड्यादिषु ॥ १९ ॥
[2]प्रागादिप्लवभास्करांशदलमात्रं मर्म सूत्रस्थितै-
र्नीत्वा विन्यसनेन मर्मपरिपीडां स्तम्भकुड्यादिषु ।

[1] The text reads मुख्यु and the commentary मुख. But cf. S'ilparatna 6. 2. 8. (Trivandrum Edition, 1922). This last has फल्लाट instead of भल्लाट (See Adhyāya 9).

[2] The MS. reads प्रागोदक्प्लव. This is incorrect. I have therefore altered it into प्रागादि ।

वास्तुन्यत्र निपीडिते महिषसिंहानेकपानां शिरो
हैमं कूर्मवराहयोश्च निखनेत्तच्छान्तये शान्तिकृत् ॥ २० ॥
[1]क्षेत्रेऽष्टादशसंख्यखण्डरचिते विज्ञाय वीथिस्थितिं
तत्रैवाथ पुटद्वयैक्यकरणाज्ज्ञात्वा च वास्तुस्थितिम् ।
स्थाने तत्र नृणामनुत्तमगुणे दुर्वीथिमर्मोनिते
कुर्याद्धाम नृमात्रकाष्ठनवदिक्तालश्च दण्डो भवेत् ॥ २१ ॥
एकं स्याद्यदि दक्षिणं गृहमुभे चेत्तस्य पाश्चात्यकं
तत्सौम्यं च गृहत्रिके गृहचतुष्कं प्राच्यमेतानि च ।
प्राच्यां केतुजमेणराजजमिदं चापद्यवाच्यामथो-
दीच्यां ते गजजं च तानि वृषभं चाहुः प्रतीच्यां गृहम् ॥ २२ ॥
[2]षड्ढस्तादिकवंशमाननिचये ऽष्टघ्ने सदिक्संख्यके
त्र्यंशीकृत्य तदेककेन गृहनाहे कल्पिते ऽर्धीकृते ।
वेदघ्ने रविविश्ववासवविकारात्यष्टिसाष्टादशा-
शाद्द्वन्द्वेध्महृते फलेन विततिस्तन्यूननाहाततिः ॥ २३ ॥
[3]इष्टातानवितानमाननिचये त्रिघ्ने ऽष्टभिर्भाजिते
शेषो योनिरिह व्ययो मुनियुजाथायो ऽष्टनिघ्ने ऽरुणैः ।

[1] The commentary quotes the following verses.

यवोदरैरष्टसंख्यैरङ्गुलं तैस्त्रिभिः पुनः ।
मुष्टिस्तद्द्वितयं तालं पदं स्यादङ्गुलाष्टकम् ॥
चतुर्विंशाङ्गुलैर्हस्तो वितस्तिर्द्वादशाङ्गुलः ।
दण्डः करचतुष्कं स्याद्रज्जुर्दण्डाष्टकं स्मृतम् ॥

[2] The commentary refers to a different view for which it quotes the following.

पर्यन्ततोऽर्धस्वचतुर्थहीने वस्वादिदन्तावधिकैर्विभक्ते ।
यश्चांशकस्तेन चतुर्गुणेन विस्तारमानं विदधीत धीमान ॥

[3] The commentary quotes the following.

नाडिकार्धद्वयं गच्छेदङ्गुलस्य तिथावपि ।
एवं चतुर्विंशतिभिः षष्टिनाड्यः प्रकीर्तिताः ॥

ऋक्षै ऋक्षमवाप्तिरत्र तु वयो ज्ञेयं तिथिस्त्रिंशता
वारो भूमिधरैर्निधिप्रगुणिते[1] धर्माहृते वा व्ययः ॥ २४ ॥
प्रागाद्यान्ध्वजधूमसिंहसरमागोगर्दभेभद्रिका-[2]
न्योनीनोजसमाञ्शुभाशुभकृतो ऽथो बाल्यकौमारके ।
भूयो यौवनवार्धके च निधनं चाहुर्वयांस्यन्तिमं
नेष्टं ज्ञेयमिहर्क्षवारतिथियोगाद्यं बुधैर्लोकतः ॥ २५ ॥
[3]अष्टाविंशतिधा कृते गृहविताने मित्रवृत्रारिभि-
श्चेध्मांशैरखिलांशतश्च युतविस्तृत्या गृहाभ्युच्छ्रयः ।
स्तम्भो ऽष्टांशततः करद्वयमितो ऽब्ध्याद्यङ्गुलैर्वर्धित-
श्चाधिष्ठानमतो ऽर्धतो ऽत्र रसभागादिक्षयश्च क्वचित् ॥ २६ ॥

[1] The MS. reads प्रगुणितैः ।

[2] The MS. wrongly reads गर्दभेभः पिकात् । The commentary quotes :

आयाधिक्यं व्ययतः संपाद्यं सर्वथान्यथापत्तिः ।
नक्षत्रादिशुभत्वं ज्योतिश्शास्त्रादितः सुविज्ञेयम् ॥

[3] Quotations in the commentary :

विस्तारेण समं पादमानमित्युच्यते बुधैः ।
विस्तारस्य चतुर्थांशयुतं वा हीनमेव वा ॥
षट्सप्ताष्टाङ्कदिग्भागैर्युतं वा वियुतं तु वा ।
सपादत्रिकहस्तं तु सर्वेषामपि शोभनम् ।
रसाद्यष्टाङ्कदिग्भागैः पादमानात्प्रकल्पयेत् ।
अधिष्ठानं तु तत्त्र्यंशादधिकं त्वपि कुत्रचित् ॥
अधिष्ठानं द्विधा दृष्टं मञ्चकं गळमञ्चकम् ।
अधिष्ठानस्य मानेन द्वादशांशं प्रकल्पयेत् ॥
करोतु पादुकं द्वाभ्यां रसांशैर्जगतीं ततः ।
गळं प्रतिं पृथग्द्वाभ्यामिति स्याद्गळमञ्चकम् ॥
अथवा पादुकं द्वाभ्यां सप्तभिर्जगतीं ततः ।
पावकांशैः प्रतिं कुर्यान्मञ्चकं नाम तत्स्मृतम् ॥
विज्ञेयः पादुकस्यात्र सत्रिपादेन निर्गमः ।
गळात्प्रतिजगत्योस्तु गळतुर्यांशनिर्गमः ॥

मासूरेंऽशैर्दिनेशांशिनि सति जगतीकैरवे श्रुत्युपाये-
स्तच्छिष्टैः पट्टिकामन्तरिमपि रचयेद्वाजनं च प्रतिं च ।
प्रत्युत्पन्नक्रमाख्ये क्रम इति कथितः पट्टिकान्तं तथातः
खण्डान्सार्धैकतो वाजनमपि सदलैकांशतः पादबन्धे ॥ २७ ॥
[1]यावत्स्वोत्सेधमानं गमयतु जगतीं बाह्यतो मानसूत्रा-
त्तत्तुल्यं कैरवं चोच्छ्रयसमचरणोनार्धपादांशकं च ।
शिष्टं तत्पट्टिकाब्जादिकमपि गमयेन्मानसूत्रात्समन्ता-
त्तत्तच्छोभानुरूपं गमयतु जगतीसूत्रतः पादुकं च ॥ २८ ॥
गेहे त्रिदोर्वर्गभवे द्विदोर्मितान् स्तम्भांस्ततोऽभ्यङ्गुलवर्धितान् क्रमात् ।
चतुष्कराद्युत्तरवर्गजेषु तान्करोत्वधिष्ठानमतोऽर्धसंमितम् ॥ २९ ॥
भक्ते प्रत्युत्तरान्तर्गतचरणसमुन्मानकेऽष्टाङ्कदिग्भि-
स्तेष्वेकांशात्तमूलप्रततितदुरगांशादिहीनाग्रतानान् ।
दारुस्तम्भांस्तदर्धे विहिततितदलाग्न्यब्धिभागोनतानान्
कुड्यस्तम्भांश्च कुड्ये रचयतु चरणाग्रप्रतानोऽत्र दण्डः ॥ ३० ॥
[2]कार्याः स्युश्चरणा युगाष्टनृपकोणाः सर्वतो वर्तुला
विस्तारत्रिगुणोपरित्रिगुणविस्तारोन्मिताष्टाश्रकाः ।

प्रतेः पादुकतुल्यः स्याद्दलहीने तु निर्गमः ।
अधिष्ठानमिति प्रोक्तं लघुमात्रेण मन्दिरे ॥
वास्त्वाधारसमुच्छ्रये प्रकृतिभक्ते वा त्रिभिः पादुकं
छन्दोभिर्जगतीं रसैः कुमुदकं चैकेन तत्पट्टिकाम् ।
भागाभ्यां गळपादकान्विरचयेदर्धांशतः पट्टिकां
क्षुद्रां सार्धधरांशकेन महतीं स्वांशोल्लसद्वाजनाम् ॥

[1] The Triv. ed. of the Tantrasamuccaya (2. 16) reads यावत्स्वा-योच्चमानम् ।

[2] The commentary quotes :

स्तम्भमूलस्य कर्णेन तुर्यश्रमपि कल्पयेत् ।
स्तम्भमूलस्यार्धघनां स्तम्भमूलाकृतिं तथा ॥

मूलोद्भावितकण्ठसूत्रचतुरश्रोर्ध्वाङ्गवृत्ताः पुनः
 शुण्डोद्भेदविचित्रवृत्तरुचिरा वाराब्धगेहोचिताः ॥ ३१ ॥
पादव्यासततं ततो दलघनोद्यत्पङ्क्तिकां वोत्तरं
 चूळिं वाङ्घ्रिघनां तदर्धविततां स्थूणोपरि स्थापयेत् ।
कार्यास्तत्र लुपाश्शरादिनवनेत्रांशितेऽङ्घ्रयुच्छ्रये
 द्वित्र्यम्भोधिधरांशतो विहितलम्बाः स्वाग्रधान्याचिताः ॥ ३२ ॥
खण्डोत्तरं चरणविस्तृतितुल्यविस्तारोत्सेधमुत्तममतश्चरणोनतीव्रा ।
पत्रोत्तरं दलविहीनघनं कनिष्ठं रूपोत्तरं घनतती विपरीततो वा ॥ ३३ ॥
उत्सेधे विशिखांशिते द्वितयतो रूपोत्तरे वाजनं
 षड्भक्तेऽल्पमिलांशतो द्वितयतो वा स्यान्महावाजनम् ।
एतन्निर्गमनं निजांशविहितं न्यस्येदुपर्युत्तर-
 स्यैतत्तीव्रसमुच्छ्रयोच्छ्रयदलांशव्याततां पङ्क्तिकाम् ॥ ३४ ॥
कुर्यादुत्तरपङ्क्तितोऽखिललुपाः कूटप्रविष्टाग्रकाः
 स्वस्वाशाहितकर्णसूत्रकमिता मध्यादिकर्णावधि ।
स्तम्भोच्चे शरशैलनन्दनयनैर्भक्ते चतुर्धोत्तरा-
 त्तासां स्यादवलम्बनं नयनवह्न्यब्ध्युर्वरांशैः क्रमात् ॥ ३५ ॥
गेहव्यासगजांशकुड्यमिहिरांशेष्वश्वबाणांशकान्
 कृत्वान्तश्च बहिश्च कल्पितसिराविन्यस्तयोगान्यथ ।
द्वाराण्यङ्गणगेहमध्यसिरयोर्मध्यस्थमध्यान्यथा
 दध्यादङ्गुलकल्पितागमवयोयोनीनि पूर्वादितः ॥ ३६ ॥
कुर्यात्सर्वसुरेषुशैलवसुनन्दाशांशितेऽङ्घ्रयुच्छ्रये
 द्वारोत्सेधमिहैकभागरहितं विस्तीर्णमात्मार्धतः ।

अधिष्ठानोपरिष्टात्तु प्रक्षिपेत्पादसंधिताम् ।
पादाग्रस्य त्रिभागैकविस्तीर्णाग्रशिखा भवेत् ॥
बोधिकां निक्षिपेत्तत्र त्रिचतुष्पञ्चदण्डकैः ।
संमितामङ्घ्रिमध्यस्थप्रमाणविततां तथा ॥
घनामुत्तरवत्तत्र स्तम्भाग्रशिखयाचिताम् ।

योगौ स्तम्भसमाधिपाददलविस्तीर्णौ स्फुरद्वाजनौ
विस्तारार्धघनौ भुवङ्गमपतङ्गाढ्यौ च मूलाग्रयोः ॥ ३७ ॥
द्वारोत्सेधनियुक्तशेषचरणोत्सेधे शरांशीकृते
द्व्यंशेनाधरपट्टिकां मितघनां सार्धेन वाञ्छांशिते ।
हीनां वाजनकेन योगविततां शिष्टांशतः पट्टिका-
मूर्ध्वस्थामथ मङ्गलाढ्यफलकां युक्त्योर्ध्वपट्ट्यूर्ध्वतः ॥ ३८ ॥
दण्डाढ्यङ्गमतङ्गजांशबहलं तावद्युतद्वार्दल-
व्यासं मूलशिखायुतं दृढतरं कार्यं कवाटद्वयम् ।
कार्या वामकवाटरोपितपराग्भागार्धतीव्रा तत-
स्तद्द्विघ्नप्रतता च सूत्रफलका सूद्यत्स्तनाद्युज्ज्वला ॥ ३९ ॥
[1]आशाहर्पतिसूत्रभेदिनि गृहे षष्ठेऽथवा सप्तमे
सूत्रे द्वारमथापरं वितनुयाच्छालासु सव्यार्धके ।
सिंहोक्षद्विपकेतुयोनिविहितं चाग्न्यादिकोणालयं
मिश्रे दक्षिणपश्चिमे पुनरुदक्प्राच्ये च गेहे मिथः ॥ ४० ॥
शालाश्वेन्मुखजन्मनामिह चतस्रोऽन्योन्यभिन्ना दिशा-
स्वन्तस्थध्वजयोनिकाङ्गणसिरानीतस्वमध्याःक्रमात् ।
याम्याद्या नवशैलबाणगुणसंख्यानैः परीत्याङ्गुलै-
रन्योन्याकलितैकयोनिकचतुश्शालं गृहं भूभुजाम् ॥ ४१ ॥
पर्यन्तस्य जमादधीत चतुरश्रं मध्यतश्चाङ्गणं
तत्पार्श्वे व्यतिपत्रमानमपरं चाभ्यन्तरं केतनम् ।
तत्तुर्यश्रयुजोऽथकोणचतुरश्रेषूत्तरान्तध्वजं
युक्त्या तूत्तरविस्तृतिं च जनयेत्तुर्यश्रशालाविधौ ॥ ४२ ॥
मानाद्वाह्यान्निजेष्टाद्रहयतु मितिमाभ्यन्तरीं शेषमाना-
त्कोणाढ्यश्रोदरोद्यद्भुजमपि शितधीरष्टनिघ्नं विजह्यात् ।

[1] The commentary quotes:
तक्षे प्रविष्टे तु गृहं बन्धोरप्यशुचिर्भवेत् ।
तस्मादन्यगृहे वासं मोचयेत्तु कदाचन ॥

तच्छेषादुत्तराणामपि जनयतु विष्कम्भमष्टयंशतोमू-
न्यापर्यन्तायतान्याकलयतु चतुर्दिक्षु बाह्यान्तराणि ॥ ४३ ॥

कृत्वा बाह्यान्तरमितिमिमामात्तक्लप्तां ततोऽस्यां
दिक्कोणोद्यद्गृहपतिमितिं योनिभेदोपपन्नाम् ।
कुर्याद्युक्त्या मितिषु कुशलः सा तु तुर्यश्रशाला
प्राग्वन्मध्येऽङ्गणविलसिता स्यात्पुनर्भिन्नशाला ॥ ४४ ॥

दिग्गेहानि विदिग्गृहैरभिमतैर्योनिप्रभिन्नैर्मिथः
श्लिष्टानीह बहिःसमैव परितः सीमाथ मध्येऽङ्गणम् ।
श्लिष्टानां तु मिथो भवेदिह मितिः संभूय धाम्नां ध्वजो
भिन्ना सैकविदिश्यसत्यपि पुनस्तुर्यश्रशाला मता ॥ ४५ ॥

प्राच्ये चाग्निसमर्पणादिकमुदीचीने कुटुम्बादिकं
व्यत्यस्य प्रकरोतु वा द्वयमिदं याम्येऽतिथिप्रीणनम् ।
पाश्चात्ये धनसन्निधापनमतो द्वन्द्वं विपर्यस्य वा
शेषार्धे कृतयोस्तथा शयनविद्याभ्यासनाद्यं चरेत् ॥ ४६ ॥

कृत्वा दिङ्नवनागवर्गपदभिन्ने क्षेत्रकेऽन्तर्गतै-
रष्टयङ्काङ्घ्रिपदैर्विधातृपदयुक्तं प्राङ्गणं मध्यतः ।
शालाः पङ्क्तियुतार्यकादिकजुषां तद्बाह्यतस्तद्बहि-
र्गोष्ठोलूखलवेश्मकादिविलसत्पङ्क्त्यावृतं कल्पयेत् ॥ ४७ ॥

माहेन्द्रे सलिलाधिराजि च तटाकं कूपमैशानके
पर्जन्ये पवनालयं शिखिनि वा कूप्यालयं तद्बहिः ।
कार्तान्त्यां कळसद्म नैर्ऋतपदे कुर्वीत धान्यालयं
गोशालाम्बुपतौ हरावपि समीरे धाम चौलूखलम् ॥ ४८ ॥

मध्ये ब्रह्मगृहं नृपस्थितिगृहं मित्रे विहारोऽनिले
व्यायामो ऽर्गळके धनं धनपतौ स्नानादि पर्जन्यके ।
ईशे ऽर्चाद्यथ भुक्तिसद्म वरुणे नृत्तादि गान्धर्वके
शस्त्राद्यं निर्ऋतौ गृहक्षतपदे शय्यापदं भूभुजाम् ॥ ४९ ॥

दण्डात्प्राङ्गणमध्यतोऽङ्घ्रिशरषट्सप्तादिसंख्या व्यती-
त्यादद्यादथ पौष्पदन्तिकपदे द्वारं प्रचारोदितम् ।

भल्लाटेन्द्रगृहक्षतेष्वपि महाद्वाराण्युपद्वारका-
ण्यष्टाशान्तभृशादिकेषु परतः पर्जन्यनिष्ठेष्वपि ॥ ९० ॥
कुर्यात्प्राङ्गणतो गमागमकृते द्वारं महत्पादुके
हस्तैर्वाङ्गुलकैः प्रकल्पितशुभायाद्यप्ररूढोत्तरम् ।
स्वायामप्रविभक्तरुद्रदशनन्देभांशविस्तारतः
खण्डोत्पन्नघनाङ्घ्रियुग्मविलसन्मङ्गल्यपद्यादिकम् ॥ ९१ ॥
एकाङ्घ्र्यूनादिदण्डोच्छ्रितमुपरि निधायोत्तरे वाजनं प्राक्
तिर्यग्दण्डोच्छ्रिताङ्घ्र्यूनितवहलतुलास्तासु[1] वंशानुवृत्त्या ।
स्वार्धाक्रान्ता जयन्तीस्तदुपरि सुसमीकृत्य कृत्वानुमार्गं
निश्छिद्रं छादयेत् स्वोचितघनफलका प्रस्तरेणोर्ध्वभागम् ॥ ९२ ॥
लुपास्तम्भादिसंख्यानां युग्मत्वं परिकल्पितम् ।
स्यादर्गलोर्ध्वभागस्य तत्पादार्धसमोच्छ्रयः ॥ ९३ ॥
आवापवत्सयोः कूपं कुर्यादिन्द्रजयेऽथवा ।
यानाङ्गादिषु केतुः स्यात् सिंहः पीठासनादिषु ।
कूपभाण्डादिषु वृषः पर्यङ्कादिष्विभश्शुभः ॥ ९४ ॥
यवैराभरणादीनामङ्गुलैरासनादिषु ।
अनामिकाङ्गुलिद्वन्द्वप्रमाणेनायुधादिषु ॥ ९५ ॥
मुष्टिभिर्यज्ञपात्रादौ तालेन प्रतिमादिषु ।
वितस्तिमानतो ग्राह्यं वस्त्रप्रावरणादिकम् ॥ ९६ ॥
गेहादीनां तु हस्तेन वास्तोर्दण्डेन कीर्तितम् ।
दुर्गादीनां तु रज्ज्वा च नाहमानं विदुर्बुधाः ॥ ९७ ॥
योनिव्ययायनक्षत्रवयांसि तिथिवारकौ ।
एवमादीनि चिन्त्यानि शिल्पिभिः शिल्पकर्मणि ॥ ९८ ॥

इति षट्पञ्चाशिका समाप्ता ॥

---

[1] The Triv. ed. of the Tantrasamuccaya (2. 46) reads विततितुलाः ।